र्होमाननुज्ञानार्थम्। तस्मात् सायं प्रातश्च समिधमादध्यात् तथाच मनुः।

"प्रातराहृत्य समिधं सन्निदध्याद्विहायसि।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः"।

इति। "सायं प्रातः समिधमादध्यात्"—इति च गृह्यान्तरम्। तस्मात् प्रातः समिदाधानं नास्ति,—इत्यसङ्गतं वचनम्। समिदाधानानन्तरञ्चाग्निमाचार्यञ्चाभिवादयेत्। तथाच गृह्यान्तरम्। "उभयत्राग्निं समिध्य गोत्रनामनी प्रोच्याग्निमभिवाद्याचार्यमभिवादयेत्"—इति ॥ ० ॥ ४६ ॥ ० ॥

अथेदानीं ब्रह्मचारिणो भोजनकालः। कुतः ?

"कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया"।

इति स्मरणात्। स खल्वयं ब्रह्मचारी उपनयनकर्म्मण ऊर्द्धम्—

**त्रिरात्रमक्षारलवणाशी भवति ॥ ४७ ॥**

व्याख्यातं सूत्रम् ॥ ० ॥ ४७ ॥ ० ॥

**तस्यान्ते सावित्रश्चरुः ४८ ॥**

तच्छब्देनोपनयनव्रतस्य परामर्शः। तस्योपनयनव्रतस्य न पुनरुपनयनकर्म्मणः, न वा सन्निहिततरस्य त्रिरात्रस्य। कुतः ? तस्येत्यानर्थक्यापत्तेः। अन्ते—इत्येतावतैव निर्व्वाहात्। गोदानादिव्रतान्तराणामन्ते होमान्तरस्य वक्ष्यमाणत्वादुपनयनव्रतान्तेऽपि कस्यचिदभ्युपगन्तुमुचितत्वाच्च। तथाच गृह्यान्तरम्। "सद्यप्रवचनव्रतान्ते सावित्रश्चरुः गोदानादीन्यनुप्रवचनीयानि व्रतान्यैन्द्रस्थालीपाकान्तानि भवन्ति"—इति। तस्मात्—उपनयनकर्म्मण-

श्वतुर्थेऽह्नि सावित्रीचरुहोमः—इति भवदेवभट्टमतम्, उपनयनकर्मदिन एव आचार्यो माणवकाय भैक्षं प्रदाय सावित्रचरुहोमं कुर्यात्—इति रघुनन्दनमतञ्चासङ्गतमेव। 'उपनयनरूपव्रतस्यान्ते सावित्रश्चरुः'—इति रघुनन्दनस्य स्वव्याख्याऽप्येवं व्याकुप्येत। किञ्च। स खल्वयं व्रतान्ते सावित्रं चरुं व्याख्याय पुनरुपनयनकर्मणोऽनन्तरमेव तं वर्णयन् व्रतकर्मणोर्व्विवेकमविद्वांसमिवात्मानं ख्यापयति। भट्टभाष्येप्युक्तम्—'तस्य व्रतस्य न कर्मणः न च सन्निधानात् चिराचस्य। कुतः? अव्यक्तं प्रधानगामि,—इति वचनात्। अन्यथा अस्यान्ते—इति ब्रूयात्'—इति। अलमति प्रसङ्गेन।

सविता देवता अस्येति सावित्रश्चरुः कर्त्तव्यः,—इति प्रसङ्गादिहोच्यते। सवित्रे त्वा जुष्टं निर्व्वपामीति निर्व्वापः। सवित्रे स्वाहा—इति प्रधानहोमः ॥ ० ॥ ४८ ॥ ० ॥

अवसिता प्रासङ्गिकी कथा। प्रकृतमिदानीमनुवर्त्तामहे—

## यथार्थम् ॥ ४९ ॥

उपनयनकर्मणः परिसमाप्तिरनेनोच्यते ॥ ० ॥ ४९ ॥ ० ॥

## गौर्दक्षिणा ॥ ५० ॥

उपनयनकर्मण एव नोपनयनव्रतस्य। कुतः? उपनयनकर्मणोऽनन्तरम् "आचार्याय वरोदक्षिणा"—इति गृह्यान्तरसूत्रणात्। अस्माच्च गृह्यान्तरात् दक्षिणेयमाचार्याय दातव्या। तस्मात् ब्रह्मचारिणे भैक्षप्रदानानन्तरमेवाचार्यः कर्मशेषं समापयेत्—इति

भट्टनारायणाद्यनुमतं समीचीनमवोचाम। समिदाधानस्य प्रधानकर्म्मान्तरतयोपनयनकर्म्मानङ्गत्वात् अहःशेषस्थितेस्तादर्थ्याच्च ॥ ० ॥ ५० ॥ ० ॥

इयमपरा सूत्रद्वययोजना,—

## यथार्थम् ॥ ५१ ॥

प्रकृतस्य सावित्रचरोरवसाने यथार्थं यथाप्रयोजनं यथाप्राप्तमित्येतत्। किमनेनोक्तं भवति? एतदनेनोक्तं भवति। उपनयनव्रतान्ते सावित्रहोमं कृत्वा, अग्ने व्रतपते—इत्यादिमन्त्रैः सूचयिष्यमाणविशेषैराज्येन व्रतसमापकहोमञ्च कृत्वा, तन्त्रं समापयेत्—इति। स खल्वयमाज्यहोमः सर्व्वेष्वेव व्रतान्तेषु स्यादिति वक्ष्यामः ॥ ० ॥ ५१ ॥ ० ॥

## गौर्दक्षिणा ॥ ५२ ॥

इयं दक्षिणाऽप्युपनयनव्रतस्यैव। एतदपि परस्तादुपपादयिष्यामः। अस्यामपि वर्णनायामुपनयनकर्म्मणः प्राचीनैव परिसमाप्तिः, दक्षिणा च गौरेव स्यात्, पूर्वोक्तकारणात्—इति न कश्चिद्विरोधः। परन्तु सावित्रचरोः कर्म्मक्रमस्यासूत्रणात् यथार्थमित्यस्य कर्म्मापवर्गपरत्वावगतेश्च पूर्व्वैव योजना समीचीनेति प्रतिपद्यामहे। अतिक्रान्तसंबन्धश्चाचार्य्यस्यानुमत इत्यावेदितमधस्तात् ॥ ० ॥ ५२ ॥ ० ॥

इति महामहोपाध्यायराधाकान्तसिद्धान्तवागीशभट्टाचार्य्यात्मज-
श्रीचन्द्रकान्ततर्कालङ्कारस्य कृतौ गोभिलीयगृह्यसूत्रभाष्ये
द्वितीयप्रपाठकस्य दशमी खण्डिका ॥ ० ॥

॥ समाप्तश्चायं द्वितीयः प्रपाठकः ॥

---

